न शोचति विमुक्तश्च विमुच्यते । एतद्वैतत् ॥ १ ॥
हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदति-

---

तैरेकादशद्वारं पुरम् । कस्याजस्य जन्मादिविक्रियारहितस्या-
त्मनो राजस्थानीयस्य पुरधर्म्मविलक्षणस्यावक्रचेतसः । अवक्रम-
कुटिलमादित्यप्रकाशवन्नित्यमेवावस्थितमेकरूपं चेतो विज्ञानम-
स्येत्यवक्रचेतास्तस्यावक्रचेतसो राजस्थानीयस्य ब्रह्मणः । यस्येदं
पुरं तं परमेश्वरं पुरस्वामिनमनुष्ठाय ध्यात्वा ध्यानं हि तस्या-
नुष्ठानं सम्यग्विज्ञानपूर्व्वकं तं सर्व्वैषणाविनिर्म्मुक्तः सन् समं सर्व्व-
भूतस्थं ध्यात्वा न शोचति । तद्विज्ञानादभयप्राप्तेः शोकावस-
राभावात् । कुत इहैवाविद्याकृतकामकर्म्मबन्धनैर्विमुक्तो भ-
वति । विमुक्तश्च सन्विमुच्यते पुनः शरीरं न गृह्णातीत्यर्थः ॥१॥
स तु नैकशरीरपुरवर्त्त्येवात्मा किन्तर्हि सर्व्वपुरवर्त्ती कथं
हंसः हन्ति गच्छतीति । शुचिषच्छुचौ दिव्यादित्यात्मना सीद-
तीति । वसुर्वासयति सर्व्वानिति । वाय्वात्मना अन्तरिक्षे
सीदतीत्यन्तरिक्षसत् । होता अग्निरग्निर्वै होतेति श्रुतेः ।
वेद्यां पृथिव्यां सीदतीति वेदिषत् । इयं वेदिः परोऽन्तः पृथिव्या
इत्यादिमन्त्रवर्णात् । अतिथिः सोमः सन्द्रोणे कलशे सीदतीति

---

पुरोपचयापचयाभ्यामुपचयापचयराहित्यं तत्सत्त्वाप्रतीतिमन्त-
रेण सत्ताप्रतीतिमत्त्वं स्वातन्त्र्यम् ॥ १ ॥
या यज्ञे प्रसिद्धा वेदिः पृथिव्याः परोऽन्तः परस्वभाव इति
वेद्याः पृथिवीस्वभावत्वसङ्कीर्त्तनात्पृथिवी वेदिशब्दवाच्या भव-
तीत्यर्थः । असौ वाऽऽदित्यो हंसः शुचिषदिति ब्राह्मणे नादित्यो
मन्त्रार्थतया व्याख्यातः कथं तद्विरुद्धमिदं व्याख्यानमित्य.श-

थिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतम्बृहत् ॥ २ ॥

ऊर्द्ध्वम्प्राणमुन्नयत्यपानं प्रत्यगस्यति । मध्ये

दुरोणसत् । ब्राह्मणोऽतिथिरूपेण वा दुरोणेषु गृहेषु सीदतीति। नृषत् नृषु मनुष्येषु सीदतीति नृषत् । वरेषु देवेषु सीदतीति वरसत् । ऋतसदृतं सत्यं यज्ञो वा तस्मिन् सीदतीति। व्योमसत् व्योम्न्याकाशे सीदतीति व्योमसत् । अब्जा अप्सु शङ्खशुक्तिमकारादिरूपेण जायत इति । गोजाः गवि पृथिव्यां व्रीहियवादिरूपेण जायत इति । ऋतजाः यज्ञाङ्गरूपेण जायत इति । अद्रिजाः पर्व्वतेभ्यो नद्यादिरूपेण जायत इति । सर्व्वात्मापि सन्नृतमवितथस्वभाव एव बृहन्महान् सर्व्वकारणत्वात् । यदाप्यादित्य एव मन्त्रेणोच्यते तदाप्यात्मस्वरूपवत्त्वमादित्यस्याङ्गीकृतत्वाद्ब्राह्मणो व्याख्यानेऽप्यविरोधः । सर्व्वथामेक एवात्मा जगतो नात्मभेद इति मन्त्रार्थः ॥ २ ॥

आत्मनः स्वरूपाधिगमे लिङ्गमुच्यते । ऊर्द्ध्वं हृदयात्प्राणं प्राणवृत्तिं वायुमुन्नयति ऊर्द्ध्वं गमयति । तथाऽपानं प्रत्यगधोऽस्यति क्षिपति । य इति वाक्यशेषः । तं मध्ये हृदयपुण्डरीकाकाशे आसीनं बुद्धावभिव्यक्तविज्ञानप्रकाशनं वामनं सम्भजनीयं

इत्याह । यदाप्यादित्य एवेति । सूर्य्य आत्मा जगतस्तस्थुषश्चेति मन्त्रान्मण्डलोपलक्षितस्य चिद्धातोरिष्यत एव सर्व्वात्मत्वमित्यर्थः ॥ २ ॥

येयं प्रेते विचिकित्सा मनुष्य इति याऽपूर्व्वविचिकित्सा प्रश्नभतत्वेनोद्भाविता सापि निर्म्मूलेत्येतद्दर्शयितुं देहव्यतिरिक्ता-

वामनमासीनम्विश्वे देवा उपासते॥ ३॥
अस्य विस्रंसमानस्य शरीरस्थस्य देहिनः। देहा-
द्विमुच्यमानस्य किमत्र परिशिष्यते। एतद्वैतत् ॥४॥
न प्राणेन नापानेन मर्त्यो जीवति कश्चन।

विश्वे सर्वे देवाश्चक्षुरादयः प्राणा रूपादिविज्ञानं बलिमुपाह-रन्तो विश इव राजानमुपासते तादर्थ्येनानुपरतव्यापारा भवन्तीत्यर्थः॥ ३॥

यदर्थी यत्प्रयुक्ताश्च सर्व्वे वायुकरणव्यापाराः सोऽन्यः सिद्ध इति वाक्यार्थः। किञ्चास्य शरीरस्थस्यात्मनो विस्रंसमानस्यावस्रंसमानस्य भ्रंश्यमानस्य देहिनो देहवतो विस्रंसन-शब्दार्थमाह देहाद्विमुच्यमानस्येति। किमत्र परिशिष्यते प्राणादिकलापे न किञ्चन परिशिष्यतेऽत्र देहे पुरस्वामिनि विद्रवण इव पुरवासिनं यस्यात्मनोऽपगमेऽचणमात्रात्कार्य्यकार-णकलापं सर्व्वमिदं हतबलं विध्वस्तं भवति नष्टं भवति सोऽन्यः सिद्धः। स्यान्मतं प्राणापानाद्यपगमादेवेदं विध्वस्तं भवति न तु व्यतिरिक्तात्मापगमात्प्राणादिभिरेवेह मर्त्त्या जीवन्तीति॥४॥

किञ्च न प्राणेन नापानेन चक्षुरादिना वा मर्त्त्यो मनुष्यो देहवान् कश्चन जीवति न कोऽपि जीवति। न ह्येषां परार्थानां

त्मास्तित्वं साधयति। आत्मनः स्वरूपाधिगम इत्यादिना॥ सर्वे-प्राणकरव्यापारास्चेतनार्थास्तत्प्रयुक्ता भवितुमर्हन्ति जडचेष्ट-त्वाद्रथचेष्टावदित्यर्थः। शरीरं चेतनशेषं तद्विगमे भोगानर्हत्वा-द्राजपुरवदित्यर्थः। किञ्चास्येत्यन्यथासिद्धिं शङ्कते। स्यान्मत-मिति॥ ३॥ ४॥

इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ ॥ ५ ॥

हन्त त इदम्प्रवक्ष्यामि गुह्यम्ब्रह्म सनातनम् ।
यथा च मरणं प्राप्य आत्मा भवति गौतम ॥ ६ ॥

योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः । स्थाणु-

---

संहत्यकारित्वाज्जीवनहेतुत्वमुपपद्यते । स्वार्थेन संहतेन परेण केनचिदप्रयुक्तं संहतानामवस्थानं न दृष्टम् । यथा गृहादीनां लोके तथा प्राणादीनामपि संहतत्वाद्भवितुमर्हत्यत इतरेणैव संहतप्राणादिविलक्षणेन तु सर्वे संहताः सन्तो जीवन्ति प्राणान्धारयन्ति । यस्मिन् संहननविलक्षणे आत्मनि सति परस्मिन्नेतौ प्राणापानौ चक्षुरादिभिः संहतावुपाश्रितौ । यस्यासंहतस्यार्थे प्राणापानादिः सर्वव्यापारं कुर्वन् वर्त्तते संहतः सन् स ततोऽन्यः सिद्ध इत्यभिप्रायः ॥ ५ ॥

हन्तेदानीं पुनरपि ते तुभ्यमिदं गुह्यं गोप्यं ब्रह्म सनातनं चिरन्तनं प्रवक्ष्यामि । यद्विज्ञानात्सर्वसंसारोपरमो भवति अविज्ञानाच्च यस्य मरणं प्राप्य यथा चात्मा भवति यथा संसरति तथा शृणु हे गौतम ॥ ६ ॥

योनिं योनिद्वारं शुक्रवीजसमन्विताः सन्तोऽन्ये केचिदविद्यावन्तो मूढ़ाः प्रपद्यन्ते प्रविशन्ति शरीरत्वाय शरीरग्रहणार्थं

---

ननु जीव प्राणधारण इति धातुस्मरणाच्छरीरस्य जीवनं नाम प्राणधारणं प्राणसंयोगस्य प्राणधारणं कुण्डे दधिधारणवत्तत्र च प्राणस्यैव हेतुत्वं संयोगाश्रयत्वात् कथमुच्यते । जीवनहेतुत्वं प्राणादीनां न सम्भवतीति तत्राह । स्वार्थनासंहतेनेति ॥ कादाचित्कस्य प्राणशरीरसंयोगस्य स्वभावतोऽनुपपत्तेः सङ्घातस्य

मन्येऽनुसंयन्ति यथा कर्म यथा श्रुतम् ॥ ७ ॥

य एष सुप्तेषु जागर्त्ति कामं कामं पुरुषो निर्मिमाणः । तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ॥ तस्मिँल्लोकाः श्रिताः सर्व्वे तदु नात्येति कश्चन ॥ एतद्वैतत् ॥ ८ ॥

देहिनो देहवन्तः । स्थाणुं स्थावरभावमन्येऽत्यन्ताधमा मरणं प्राप्यानुसंयन्ति अनुगच्छन्ति यथा कर्म्म । यद्यस्य कर्म्म तद्यथा कर्म्म यैर्यादृशं कर्मेह जन्मनि कृतं तद्वशेनेत्येतत् । तथा यथाश्रुतं यादृशञ्च विज्ञानमुपार्जितं तदनुरूपमेव शरीरं प्रतिपद्यन्त इत्यर्थः ॥ ७ ॥

यथा प्रज्ञं हि सम्भवा इतिश्रुत्यन्तराद्यत्प्रतिज्ञातं गुह्यं ब्रह्म तत् प्रवक्ष्यामीति तदाह । य एष सुप्तेषु प्राणादिषु जागर्त्ति न स्वपिति । कथम् । कामं कामं तं तमभिप्रेतं स्त्र्याद्यर्थमविद्यया निर्म्मिमाणो निष्पादयन् जागर्त्ति पुरुषः । तदेव शुक्रं शुभ्रं शुद्धं तद्ब्रह्म नान्यद्गुह्यं ब्रह्मास्ति । तदेवामृतमविनाश्युच्यते सर्वशास्त्रेषु । किं च पृथिव्यादयो लोका-

च लोके परप्रयुक्तस्यैव दर्शनाद्भवितव्यमन्येन सङ्घातप्रयोजकेनेत्यर्थः । येऽयं प्रेत इति प्रष्टुः परलोकास्तित्वेऽपि सन्देह आसीत् । विशेषतस्तन्निवृत्त्यर्थमुच्यत इत्याह । इदानीमिति ॥ ५ ॥ ॥ ६ ॥ ७ ॥

जननमरणकरणानां प्रति नियमादयुगपत्प्रवृत्तेश्च पुरुषबहुत्वं सिद्धम् । त्रैगुण्यविपर्य्ययाच्चेति नानात्मानो व्यवस्थिता इत्यनेकतार्किकबुद्धिविरोधात् सर्वपुरवर्त्त्येक एवात्मेत्यत्र न चित्त-

अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव । एकस्तथा सर्व्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ॥ ९ ॥

वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव । एकस्तथा सर्व्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ॥ १० ॥

---

तस्मिन्नेव सर्वे ब्रह्मण्याश्रिताः सर्व्वलोककारणत्वात्तस्य । तदु नात्येति कश्चनेत्यादि पूर्व्ववदेव ॥ ८ ॥

अनेकतार्किकबुद्धिचालितान्तःकरणानां प्रमाणोपपन्नमप्यात्मैकत्वविज्ञानमसकृदुच्यमानमप्यनृजुबुद्धीनां ब्राह्मणानां चेतसि नाधीयत इति तत्प्रतिपादने आदरवती श्रुतिः पुनः पुनराह । अग्निर्यथैक एव प्रकाशात्मा सन् भुवनं भवन्त्यस्मिन् भूतानीति भुवनमयं लोकस्तमिमं प्रविष्टोऽनुप्रविष्टः । रूपं रूपं प्रति दार्व्वादिदाह्यभेदं प्रतीत्यर्थः । प्रतिरूपस्तत्र तत्र प्रतिरूपवान् दाह्यभेदेन बहुविधो बभूव एक एव । तथा सर्व्वभूतान्तरात्मा रूपं रूपं सर्व्वेषां भूतानामभ्यन्तर आत्मा अतिसूक्ष्मत्वाद्दार्व्वादिष्विव सर्व्वदेहम्प्रति प्रविष्टत्वात्प्रतिरूपो बभूव बहिश्च स्वेनाविकृतेन रूपेणाकाशवत् ॥ ९ ॥

तथाऽन्यो दृष्टान्तः । वायुर्यथैक इत्यादि । प्राणात्मना देहेष्वनुप्रविष्टो रूपं रूपं प्रतिरूपो बभूवेति समानम् ॥ १० ॥

---

स्यैवं सम्भवतीत्याशङ्क्यौपाधिकभेदसाधने सिद्धसाधनं स्वाभाविकभेदसाधने चानैकान्तिकत्वं दर्शयितुं प्रक्रमत इत्याह । अनेकतार्किकेत्यादिना ॥ ८ ॥ ९ ॥ १० ॥

सूर्य्यो यथा सर्व्वलोकस्य चक्षुर्न लिप्यते चाक्षुषै-र्वाह्यदोषैः। एकस्तथा सर्व्वभूतान्तरात्मा न लि-

एकस्य सर्व्वात्मकत्वे संसारदुःखित्वं परस्यैव तदिति प्राप्तम् अत इदमुच्यते। सूर्य्यो यथा चक्षुष आलोकेनोपकारं कुर्व्वन् मूत्रपुरीषाद्यशुचिप्रकाशनेन तद्दर्शिनः सर्व्वलोकस्य चक्षुरपि सन्न लिप्यते चाक्षुषैरशुच्यादिदर्शननिमित्तैरध्यात्मिकैः पापदोषैर्वा-ह्यैश्चाशुच्यादिसंसर्गदोषैः। एको वाह्यः। तथा सर्व्वभूतान्त-रात्मा न लिप्यते लोकदुःखेन। लोको ह्यविद्यया स्वात्मन्यध्य-स्तया कामकर्म्मोद्भवं दुःखमनुभवति न तु सा परमार्थतः स्वा-त्मनि। यथा रज्जुशुक्तिकोषरगगनेषु सर्परजतोदककमलानि न रज्ज्वादीनां स्वतो रूपाणि। संसर्गिणि विपरीतबुद्ध्या सनि-मित्तत्वात्तद्दोषवद्विभाव्यन्ते। न तद्दोषैस्तेषां लेपो विपरीतबुद्ध्य-ध्यासवाह्या हि ते। तथात्मनि सर्व्वो लोकः क्रियाकारकफलात्मकं विज्ञानं सर्पादिस्थानीयं विपरीतमध्यस्य तन्निमित्तं जन्मजरा-मरणादिदुःखमनुभवति नत्वात्मा सर्व्वलोकात्मापि सन्विपरीता-

प्रतिरूपोपाधिसादृश्यचतुष्कोणत्वादिधर्म्मके हि दारुणि तद्रूपो वह्निरपि लक्ष्यत इत्यर्थः। परमात्मा दुःखी स्याद्दुःखा-भिन्नत्वाल्लोकवदित्याह। एकस्य सर्व्वात्मकत्वमिति॥ अविद्यायाः प्रतिविम्बतच्चिद्धातुरज्ञो भ्रान्तो भवति। भ्रान्तस्तु कामादिदो-षप्रयुक्तः कर्म्म कुरुते तन्निमित्तं च दुःखं स्वात्मन्यध्यस्यति। परमात्मा तु निरविद्यत्वाद्दुःखसाधनशून्यत्वान्न दुःखी ततो न प्रयोजको हेतुरित्याह। लोको ह्यविद्ययेति॥ स्वरूपेण भ्र-मविषयत्वं विपरीतबुद्ध्याध्यासवाह्यत्वं रज्ज्वादीनां तथा चैत-

ष्यते लोकदुःखेन वाह्यः ॥ ११ ॥

एको वशी सर्व्वभूतान्तरात्मा एकं रूपम्बहुधा
यः करोति । तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां
सुखं शाश्वतन्नेतरेषाम् ॥ १२ ॥

---

ध्यारोपनिमित्तैर्न लिप्यते लोकदुःखेन वाह्यो वहिः कृतो वाह्यो
रज्ज्वादिवदेव । विपरीतबुद्ध्यध्यासवाह्यो हि सः ॥ ११ ॥

किञ्च स हि परमेश्वरः सर्व्वगतः स्वतन्त्र एको न तत्समो-
ऽभ्यधिको वाऽन्योऽस्ति । वशी सर्व्वं ह्यस्य जगद्वशे वर्त्तते । कुतः
सर्व्वभूतान्तरात्मा । यत एकमेव सदैकरसमात्मानं विशुद्धविज्ञा-
नरूपं नामरूपाद्यशुद्धोपाधिभेदवशेन बहुधा बहुप्रकारेण यः
करोति स्वात्मसत्तामात्रेणाचिन्त्यशक्तित्वात् । तमात्मस्थं स्वश-
रीरहृदयाकाशे बुद्धौ चैतन्याकारेणाभिव्यक्तमित्येतत् । न हि
शरीरस्याधारत्वमात्मनः । आकाशवदमूर्त्तत्वात् । आदर्शस्थमु-
खमिति यद्वत् । तमेतमीश्वरमात्मानं ये निवृत्तवाह्यवृत्तयोऽनु-
पश्यन्ति आचार्य्यागमोपदेशमनु साक्षादनुभवन्ति धीरा विवे-
किनस्तेषां परमेश्वरभूतानां शाश्वतं नित्यं सुखमात्मानन्दलक्षणं
भवति नेतरेषां वाह्यासक्तबुद्धीनामविवेकिनां स्वात्मभूतमप्यवि-
द्याव्यवधानात् ॥ १२ ॥

---

न्यस्योपाधिस्थरूपेणाध्यासाश्रयत्वेऽपि निरुपाधिकविम्बकल्पब्रह्म-
रूपेणाध्यासानाश्रयत्वात्तद्दुःखित्वप्राप्तिरित्यर्थः ॥ ११ ॥

परोत्कर्षदर्शनं पारतन्त्र्यं च स्वस्य हीनत्वं दुःखकारणं
प्रसिद्धं तदभावान्न परमात्मा दुःखी ततस्तत्प्राप्तिः परः पुरु-
षार्थो भविष्यतीत्याह । किञ्च स हीत्यादिना ॥ १२ ॥

नित्योऽनित्यानाञ्चेतनानामेको बहूनां यो विदधाति कामान् । तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम् ॥ १३ ॥

किञ्च नित्योऽविनाशी अनित्यानामविनाशिनाम् । चेतनश्चेतनानां चेतयितॄणां ब्रह्मादीनं प्राणिनामग्निनिमित्तमिव दाहकत्वमनग्नीनामुदकादीनामात्मचैतन्यनिमित्तमेव चेतयितृत्वमन्येषाम् । किञ्च स सर्वेश्वरः सर्वज्ञः कामिनां संसारिणां कर्मानुरूपं कामान् कर्मफलानि स्वानुग्रहनिमित्तांश्च कामान् य एको बहूनामनेकेषामनायासेन विदधाति ददाति प्रयच्छतीत्येतन्तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिरुपरतिः शाश्वती नित्या स्वात्मभूतैव स्यान्नेतरेषामनेवंविधानाम् ॥ १३ ॥

इदानीं परमात्मन्युपपत्तिप्रदर्शनार्थमाह । किञ्च नित्य इति॥ सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयदित्यादिश्रुतेरकृतविप्रणाशप्रसङ्गपरिहाराच्च कल्पान्तरीयभावानां प्रलीनानां कल्पान्तरे सजातीयरूपेणोत्पादः प्रतीयते स तदा स्याद्यदि विनाशिनां भावानां शक्तिशेषो लयः स्यात् । प्रलये विनश्यत्सर्वं यत्र शक्तिशेषो विलीयते सोऽभ्युपगन्तव्य इत्यर्थः । बुद्धिमतामपि ब्रह्मेन्द्रादीनां परमानन्दाभिमुख्यं हित्वा या वहिर्मुखा चेतनोपलभ्यते सापि नियन्तारं गमयतीत्याह । चेतनश्चेतनानामिति ॥ ब्रह्मादिशब्दवाच्यानां सङ्घातानां वा चेतयितृत्वं यच्चैतन्यानमित्तं सोऽस्ति पर आत्मेत्यर्थः । विमतं कर्मफलं तत्स्वरूपाद्यभिज्ञेन दीयमानं व्यवहितफलत्वात् सेवाफलवदित्याह । किञ्च स इति ॥ १३ ॥

तदेतदिति मन्यन्तेऽनिर्देश्यम्परमं सुखम्। कथन्नु तद्विजानीयां किमु भाति विभाति वा॥ १४॥

न तत्र सूर्य्यो भाति न चन्द्रतारकन्नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति स-

यत्तदात्मविज्ञानं सुखमनिर्देश्यं विर्देष्टुमशक्यं परमं प्रकृष्टं प्राकृतपुरुषवाङ्मनसयोरगोचरमपि सन्निवृत्तैषणा ये ब्राह्मणास्ते तदेतत्प्रत्यक्षमेवेति मन्यन्ते। कथन्नु केन प्रकारेण तत्सुखमहं विजानीयाम्। इदमित्यात्मबुद्धिविषयमापादयेयम्। यथा निवृत्तैषणा यतयः। किमु तद्भाति दीप्यते प्रकाशात्मकं तद्यतोऽस्मद्बुद्धिगोचरत्वेन विभाति विस्पष्टं दृश्यते किंवा नेति॥ १४॥

तत्रोत्तरमिदं भाति च विभाति चेति। कथं नु तत्र तस्मिन् स्वात्मभूते ब्रह्मणि सर्व्वावभासकोऽपि सूर्य्यो भाति तद्ब्रह्म न प्रकाशयतीत्यर्थः। तथा न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमस्मद्दृष्टिगोचरोऽग्निः। किं बहुना यदिदमादित्यादिकं सर्वं भाति तत्तमेव परमेश्वरं भान्तं दीप्यमानमनुभात्यनुदीप्यते। यथा ज्वलोल्मुकाद्यग्निसंयोगादग्निं दहन्तमनु दहति न स्वतस्तद्वत्तस्यैव भासा दीप्त्या सर्व्वमिदं सूर्य्यादि विभाति। यत एवं तदेव ब्रह्म भाति च विभाति च कार्य्यं गतेन विविधेन भासा तस्य ब्रह्मणो भारूपत्वं स्वतोऽवगम्यते। न हि

विद्वदनुभवोऽपि परमानन्दे प्रमाणमित्याह। यत्तदात्मविज्ञानमिति॥ तस्मादसम्भावितया न जिज्ञासितव्यं परमा-

र्वन्तस्य भासा सर्व्वमिदं विभाति ॥ १५ ॥

इति पञ्चमी वल्ली समाप्ता ॥ ५ ॥

ऊर्द्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः ।

---

स्वतो विद्यमानं भासनमन्यस्य कर्त्तुं शक्यम् । घटादीनामन्यावभासकत्वादर्शनाद्भारूपाणामादित्यादीनां तद्दर्शनात् ॥ १५ ॥

इति कठवल्लीभाष्ये पञ्चमी वल्ली समाप्ता ॥ ५ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥

तूलावधारणेनैव मूलावधारणं वृक्षस्य क्रियते लोके यथैवं संसारकार्य्यवृक्षावधारणेन तन्मूलस्य ब्रह्मणः स्वरूपावदिधारयिषया इयं षष्ठी वल्ली आरभ्यते । ऊर्द्ध्वमूलः ऊर्द्ध्वं मूलं यत्तद्विष्णोः परमम्पदमस्येति सोऽयमव्यक्तादिस्थावरान्तः संसारवृक्ष ऊर्द्ध्वमूलः । वृश्चनाज्जन्ममरणजराशोकाद्यनेकानर्थात्मकः प्रतिक्षणमन्यथा स्वभावो मायामरीच्युदकगन्धर्वनगरादिवद्दृष्टनष्टस्वरूपत्वादवसाने च वृक्षवदभावात्मकः कदलीस्तम्भवन्निःसारो नैकशतपाषण्डबुद्धिविकल्पास्पदः तत्त्वविजिज्ञासुभिरनिर्धारितेदंतत्त्वो वेदान्तनिर्द्धारितपरब्रह्ममूलसारोऽविद्याकामकर्म्माव्यक्ता-

---

त्मदर्शनं किन्तु श्रद्धाधीनतया विचारयितव्यमेवेत्याह । कथं न्विति ॥ १४ ॥ १५ ॥ इति पञ्चमी वल्ली समाप्ता ॥ ५ ॥

शाल्मल्यादितूलदर्शनेनादृष्टमपि वृक्षमूलं यथाऽस्तीत्यवधार्य्यते तद्वददृष्टस्यापि ब्रह्मणोऽवधारणाय प्रक्रमत इत्याह । तूलावधारणेनेति ॥ वृक्षशब्दस्य प्रवृत्तिनिमित्तमाह । वृश्चनादिति ॥ ओ व्रश्चूच्छेदने अस्य धातोः सम्प्रत्ययान्तस्य रूपं वृक्षइति ॥

तदेव शुक्रन्तद्ब्रह्म तदेवामृतमुच्यते । तस्मिंल्लोकाः

बीजप्रभवः परब्रह्मविज्ञानक्रियाशक्तिद्वयात्मकहिरण्यगर्भाङ्कुरः सर्व्वप्राणिलिङ्गभेदस्कन्धस्तृष्णाजलाशयसेकोद्भूतदर्पो बुद्धीन्द्रियाविषयप्रवालाङ्कुरः श्रुतिस्मृतिन्यायविद्योपदेशपलाशः यज्ञदानतपआद्यनेकक्रियासुपुष्पः सुखदुःखवेदनानेकरसप्राण्युपजीव्यानन्तफलस्तत्तृष्णासलिलावसेकप्ररूढ़जडीकृतदृढबद्धमूलः सत्यनामादिसप्तलोकब्रह्मादिभूतपक्षिकृतनीडः प्राणिसुखदुःखोद्भूतहर्षशोकजातनृत्यगीतवादित्रक्ष्वेलितास्फोटितहसिताकृष्टरुदितहाहामुञ्चमुञ्चेत्याद्यनेकशब्दकृततुमलीभूतमहारवो वेदान्तविषयहितब्रह्मात्मदर्शनासङ्गशास्त्रकृतोच्छेदः । एष संसारवृक्षो ऽश्वत्थो ऽश्वत्थवत्कामकर्म्मवातेरितनित्यप्रचलितस्वभावः । स्वर्गनरकतिर्य्यक्प्रेतादिभिः शाखाभिरवाक्शाखः अवाञ्चः शाखा यस्य सः । सनातनोऽनादित्वाच्चिरप्रवृत्तः । यदस्य संसारवृक्षस्य मूलं तदेव शुक्रं शुभ्रं शुद्धं ज्योतिष्मच्चैतन्यात्मज्योतिःस्वभावं

---

छेद्यत्वे युक्तिमाह । जन्मजरेत्यादिना ॥ प्रसिद्धवृक्षसाम्याद्वा वृक्षशब्दप्रयोग इत्यभिप्रेत्याह । अवसाने चेत्यादिना ॥ प्रसिद्धो वृक्षः स्थाणुर्वा पुरुषो वेति विकल्पास्पदो दृष्टस्तथाऽयमपि सद्वा-ऽसद्वा परिणामो वाऽऽरम्भो वा सद्वाऽसद्वेत्यादीनामनेकेषां शततो वा परिणामो वाऽऽरब्धो वा सद्वाऽसद्वेत्यादीनामनेकेषां शतसङ्ख्याकया खण्डबुद्धिविकल्पानां विषय इत्यर्थः । किं स्वरूपको ऽयं वृक्ष इत्यनध्यवसायगोचरः कश्चिद्वृक्षो दृष्टस्तथाऽयमपीति साम्यान्तरमाह । तत्त्वविजिज्ञासुभिरिति ॥ परस्य ब्रह्मणो विज्ञानक्रियाद्वयात्मको हिरण्यगर्भः प्रथमोऽवस्थाभेदोऽङ्कुरोऽस्येति तथोक्तः । बुद्धीन्द्रियाणां विषयाः शब्दादयः प्रवालाङ्कुराः

श्रिताः सर्व्वे तदु नात्येति कश्चन । एतद्वैतत् ॥ १ ॥
यदिदं किञ्च जगत्सर्व्वं प्राण एजति निःसृतम् ।

तदेव ब्रह्म सर्व्वमहत्त्वात् । तदेवामृतमविनाशिस्वभावमुच्यते कथ्यते । सत्यत्वात् । वाचारम्भणं विकारो नामधेयमनृतमन्यदतो मर्त्त्यम् । तस्मिन्परमार्थसत्ये ब्रह्मणि लोका गन्धर्व्वनगरमरीच्युदकमायासमाः परमार्थदर्शनाभावावगम्यमानाः श्रिता आश्रिताः सर्वे समस्ता उत्पत्तिस्थितिलयेषु तदु तद्ब्रह्म नात्येति नातिवर्त्तते मृदादिकमिव घटादिकार्य्यं कश्चन कश्चिदपि विकारः । एतद्वै तद्यद्विज्ञानादमृता भवन्तीत्युच्यते । जगतो मूलं तदेव नास्ति ब्रह्मासदेवेदं निःसृतमिति ॥ १ ॥

तत्र यदिदं किञ्च यत्किञ्चेदं जगत्सर्वं प्राणे परस्मिन् ब्रह्मणि सत्येजति कम्पते तत एव निःसृतं निर्गतं सत्प्रचलति नियमेन चेष्टते । यदेव जगदुत्पत्त्यादिकारणं ब्रह्म तन्महद्भयम् । महच्च तत् भयञ्च बिभेत्यस्मादिति महद्भयम् । वज्रमुद्यतमिव वज्रम् ।

किसलयान्यस्येति स तथोक्तः । श्रुत्यादीनि पलाशानि पलाशान्यस्येति ॥ सुखदुःखे प्राणिवेदना एवानेको रसोऽस्येति फलतृष्णैव सलिलावसेकस्तेन प्ररूढानि कर्म्मवासनादीनि सात्त्विकादिभावेन मिश्रीकृतानि दृढबन्धनान्यवान्तरमूलान्यस्य वटवृक्षस्येव तथोक्तः सत्यनामादिषु सप्तलोकेषु ब्रह्मादीनि भूतान्येव पक्षिणस्तैः कृतं नीडं यस्मिन् प्राणिनां सुखदुःखाभ्यामुद्भूतौ हर्षशोकौ ताभ्यां यथासङ्ख्येन जातानि नृत्यादीनि रुदितादिशब्दाश्च तैः कृतसुमुलीभूतो महारवो यस्मिन्निति विग्रहः ॥ १ ॥

कार्य्यस्य शून्यतापर्य्यन्तं नष्टस्यासत्त्वपूर्व्वकमेव जन्म ततो नास्ति मूलमिति शङ्कते । यद्विना ज्ञानादिति ॥ तत्र प्रथवि-

महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति ॥२॥
भयादस्याग्निस्तपति भयात्तपति सूर्य्यः । भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः ॥३॥
इह चेदशकद्बोद्धुं प्राक् शरीरस्य विस्रसः ।

---

यथा वज्रोद्यतकरं स्वामिनमभिमुखीभूतं दृष्ट्वा भृत्या नियमेन तच्छासने प्रवर्त्तन्ते तथेदं चन्द्रादित्यग्रहनक्षत्रतारकादिलक्षणं जगत् सेश्वरं नियमेन क्षणमप्यविश्रान्तं वर्त्तत इत्युक्तं भवति । य एतद्विदुः स्वात्मप्रवृत्तिसाक्षिभूतमेकं ब्रह्मामृता अमरणधर्म्माणस्ते भवन्ति ॥ २ ॥

कथं तद्भयाज्जगद्वर्त्तत इत्याह । भयाद्भीत्या परमेश्वरस्याग्निस्तपति भयात्तपति सूर्य्यः भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः । न हीश्वराणां लोकपालानां समर्थानां सतां नियन्ता चेद्वज्रोद्यतकरवन्न स्यात् स्वामिभयभीतानामिव भृत्यानां नियता प्रवृत्तिरुपपद्यते ॥ ३ ॥

तच्चेह जीवन्नेव चेद्यद्यशकच्छक्नोति शक्तः सन् जानात्येतद्भयकारणं ब्रह्म बोद्धुमवगन्तुं प्राक् पूर्वं शरीरस्य विस्रसोऽवस्रंसनात् पतनात्संसारबन्धनाद्विमुच्यते । न चेदशकद्बोद्धुं ततोऽनवबोधात्सर्गेषु सृज्यन्ते येषु स्रष्टव्याः प्राणिन इति सर्गाः पृथिव्यादयो लोकास्तेषु सर्गेषु लोकेषु शरीरत्वाय शरीरभावाय

---

पाषाणादेरसतः समुत्पत्त्यदर्शनात्तत्पूर्वकत्वप्रसिद्धेश्चास्ति सद्रूपं वस्तु जगतो मूलं तच्च प्राणपदलक्ष्यं प्राणप्रवृत्तेरपि हेतुत्वादित्यर्थः ॥ २ ॥ ३ ॥

सूर्य्यादीनां नियतप्रवृत्त्यनुपपत्त्या नियामकत्वेन सम्भावितं

ततः सर्गेषु लोकेषु शरीरत्वाय कल्पते ॥४॥

यथाऽऽदर्शे तथाऽऽत्मनि यथा स्वप्ने यथा पितृलोके। यथाप्सु परीव ददृशे तथा गन्धर्वलोके छायातपयोरिव ब्रह्मलोके ॥५॥

---

कल्पते समर्थो भवति शरीरं ग्रहीतीत्यर्थः । तस्माच्छरीरविस्रंसनात्प्रागात्मबोधाय यत्न आस्थेयः यस्मादिहैवात्मनो दर्शनमादर्शस्थस्येव मुखस्य स्पष्टमुपपद्यते न लोकान्तरेषु ब्रह्मलोकादन्यत्र । स च दुष्प्राप्यः ॥ ४ ॥

कथमित्युच्यते । यथाऽऽदर्शे प्रतिबिम्बभूतमात्मानं पश्यति लोकोऽत्यन्तविविक्तं तथेहात्मनि स्वबुद्धावादर्शवन्निर्म्मलीभूतायां विविक्तमात्मनो दर्शनं भवतीत्यर्थः । यथा स्वप्ने विविक्तं जाग्रद्वासनोद्भूतं तथा पितृलोकेऽविविक्तमेवात्मनो दर्शनं कर्म्मफलोपभोगासक्तत्वात् । यथा चाऽप्स्वविविक्तावयवमात्मरूपं परीव ददृशे परिदृश्यत इव तथा गन्धर्वलोकेऽविविक्तमेव दर्शनमात्मनः । एवञ्च लोकान्तरेष्वपि शास्त्रप्रामाण्यादवगम्यते । छायातपयोरिवात्यन्तविविक्तं ब्रह्मलोक एवैकस्मिन् । स च दुष्प्रापोऽत्यन्तविशिष्टकर्म्मज्ञानसाध्यत्वात् । तस्मादात्मदर्शनायेहैव यत्नः कर्त्तव्य इत्यभिप्रायः ॥ ५ ॥

कथमसौ बोद्धव्यः किंवा तदवबोधे प्रयोजनमित्युच्यते । इन्द्रियाणां श्रोत्रादीनां स्वस्वविषयग्रहणप्रयोजनेन स्वकारणेभ्यः

---

यत्मारसेश्वरं रूपं तदवगमायैवेह यत्नः कर्त्तव्य इत्याह । तच्चेति ॥ इहैव चैव चेद्बोद्धुं शक्तः सन्निहैव चेज्जानाति तदा मुच्यत एवेति सम्बन्धः ॥ ४ ॥ ५ ॥

इन्द्रियाणाम्पृथग्भावमुदयास्तमयौ च यत् ।
पृथगुत्पद्यमानानां मत्वा धीरो न शोचति ॥६॥
इन्द्रियेभ्यः परं मनो मनसः सत्त्वमुत्तमम् ।
सत्त्वादधि महानात्मा महतोऽव्यक्तमुत्तमम् ॥७॥

---

आकाशादिभ्यः पृथगुत्पद्यमानानामत्यन्तविशुद्धात् केवलाच्चिन्मात्रात्मस्वरूपात् पृथग्भावं स्वभावविलक्षणात्मकतां तथा तेषामेवेन्द्रियाणामुदयास्तमयौ च यत्पृथगुत्पद्यमानानामुत्पत्तिप्रलयौ च जाग्रत्स्वापावस्थापेक्षया नात्मन इति मत्वा ज्ञात्वा विवेकतो धीरो धीमान् न शोचति । आत्मनो नित्यैकत्वस्वभावत्वादव्यभिचाराच्छोकादिकारणत्वानुपपत्तेः । तथा च श्रुत्यन्तरं तरति शोकमात्मविदिति ॥ ६ ॥

यस्मादात्मन इन्द्रियाणां पृथग्भाव उक्तो नाऽसौ वहिरधिगन्तव्यः । यस्मात्प्रत्यगात्मा सर्व्वस्य तत्कथमित्युच्यते । इन्द्रियेभ्यः परं मन इत्यादि । अर्थानामिहेन्द्रियसमानजातीयत्वादिन्द्रियग्रहणेनैव ग्रहणं पूर्व्ववदन्यत् । सत्त्वशब्दाद्बुद्धिरिहोच्यते ॥ ७ ॥

अव्यक्तात्तु परः पुरुषो व्यापको व्यापकस्याप्याकाशादेः

---

इन्द्रियेभ्यः परा ह्यर्था इति पूर्व्वमुक्तम् । इह त्वर्थानामग्रहणात्सर्व्वप्रत्यगात्मत्वं न सम्भवतीत्याशङ्क्याह । अर्थानामिहेति॥ बुद्धिसुखदुःखादिः साश्रयो गुणत्वाद्रूपवदिति वैशेषिकैरनुमीयते तदसत् । साश्रयत्वमात्रसाधने सिद्धसाधनत्वान्मनस एव कामादिगुणवत्त्वश्रवणादात्माश्रयत्वकल्पने च निर्गुणत्वशास्त्रविरुद्धत्वा-

अव्यक्तात्तु परः पुरुषो व्यापकोऽलिंगएव च।
यज्ज्ञात्वा मुच्यते जन्तुरमृतत्वञ्च गच्छति ॥८॥
न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति

---

सर्वस्य कारणत्वात्। अलिङ्गो लिङ्गते गम्यते येन तल्लिङ्गं बुद्ध्यादि तदविद्यमानमस्येति सोऽयमलिङ्ग एव च। सर्वसंसारधर्मवर्जित इत्येतद्रूपं ज्ञात्वाऽऽचार्य्यतः शास्त्रतश्च मुच्यते जन्तुरविद्यादिहृदयग्रन्थिभिर्जीवन्नेव पतितेऽपि शरीरेऽमृतत्वञ्च गच्छति। सोऽलिङ्गः परो व्यक्तात्पुरुष इति पूर्वेण सम्बन्धः ॥८॥

कथं तर्हि तस्यालिङ्गस्य दर्शनमुपपद्यत इत्युच्यते। न सन्दृशे दर्शनविषये न तिष्ठति प्रत्यगात्मनोऽस्य रूपम्। अतो न चक्षुषा सर्वेन्द्रियेण। चक्षुर्ग्रहणस्योपलक्षणार्थत्वात्। पश्यति नोपलभते कश्चन कश्चिदप्येनं प्रकृतमात्मानम्। कथं तर्हि तत्पश्येदित्युच्यते। हृदा हृत्स्थया बुद्ध्या। मनीषा मनसः सङ्कल्पादिरूपस्येष्टे नियन्तृत्वेनेति मनीट् तया मनीषाऽविकल्प-

---

दात्मना सह बुद्ध्यादेरविनाभावाग्रहणाच्च बुद्ध्यादि नात्मलिङ्गमित्याह। लिङ्ग्यते गम्यते येनेति ॥ ६ ॥ ७ ॥ ८ ॥

कथं दर्शनमुपपद्यत इति प्रष्टुः कोऽभिप्रायः विषयतया दर्शनं वक्तव्यम् उताविषयतयैव दर्शनोपायो वाच्यः॥ प्रथमं प्रत्याह। न सन्दृश इति॥ रूपादिमत्तद्विशेषणञ्च दर्शनविषययोग्यं भवति तदभावादित्यर्थः॥ द्वितीयं प्रत्याह। कथं तर्हीति॥ वाह्यकरणग्रामोपरमेऽपि यदा मनो विषयान्सङ्कल्पते तदा मुमुक्षोर्बुद्धिरस्य नियन्त्री भवति। हे मनः किमर्थं त्वं पिशाचवत्प्रधावसि। न तावत्स्वप्रयोजनार्थम्॥ तव जडत्वात्प्रयोजन-

कश्चनैनम् । हृदा मनीषा मनसाभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति ॥ ९ ॥

यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।

यित्र्या । मनसा मननरूपेण सम्यग्दर्शनेन । अभिक्लृप्तोऽभिसमर्थितोऽभिप्रकाशित इत्येतत् । आत्मा ज्ञातुं शक्यत इति वाक्यशेषः । तमात्मानं ब्रह्मैतद्ये विदुरमृतास्ते भवन्ति ॥ ९ ॥

कथं प्राप्यत इति यदर्थो योग उच्यते । यदा यस्मिन् काले स्वविषयेभ्यो निवर्त्तितान्यात्मन्येव पञ्च ज्ञानार्थत्वात् श्रोत्रादी-

सम्बन्धानुपपत्तेर्विषयाणां च क्षयिष्णुत्वादिदोषदुष्टानां सम्बन्धेन प्रयोजनानुपपत्तेः । नापि चेतनार्थम् । तस्यासङ्गत्वात्परमानन्दस्वभावत्वाच्चेति नियन्तृत्वेन बुद्धिर्मनीड्च्यत इत्याह । मनस इति ॥ अविकल्पयित्रेति ॥ विषयकल्पनाशून्यया ब्रह्मास्मीत्यविषयतयैव ब्रह्मीभावव्यञ्जिकया महावाक्योत्थया बुद्धिवृत्त्या ज्ञातुं शक्यत इति सम्बन्धः ॥ कथम्भूत आत्मेत्यत आह । मनसेति ॥ यद्यन्मया दृश्यते वाह्यं घटादि तत्तदहं यथा न भवामि तथाऽस्मिन्नपि सङ्घाते यद्यद्दृश्यते तदहं न भवामि किन्तु योऽत्र द्रष्टाऽशरीरोऽस्मि सर्व्वशरीरेष्वेकलक्षणलक्षितत्वादेक एवेति विचारेण प्रथमं सम्भावित इत्यर्थः ॥ श्रुतवेदान्तानामपि केषाञ्चिद्ब्रह्मास्मीति बुद्धिस्थैर्य्यादर्शनादस्ति किञ्चित्प्रतिबन्धकान्तरं तदपनयायोपायोऽप्यन्यो वक्तव्य इत्यभिप्रेत्याह । सा हृदिति ॥ श्रवणमननाभ्यां प्रमाप्रमेयासम्भावनानिरासेऽपि चित्तस्यानेकाग्रतादोषः प्रतिबन्धकः सम्भवति तदपनयाय योगोऽनुष्ठातव्य इत्युपदिश्यत इत्यर्थः ॥ ९ ॥

यदनुगतानीति येन मनसाऽधिष्ठितानि तेन सहाऽवति-

**बुद्धिश्च न विचेष्टते तामाहुः परमाङ्गतिम् ॥१०॥**
**तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम् ।**

नीन्द्रियाणि ज्ञानान्युच्यन्तेऽवतिष्ठन्ते सह मनसा । यदनुगतानि तेन सङ्कल्पादि व्यावृत्तेनान्तःकरणेन बुद्धिश्चाध्यवसायलक्षणा न विचेष्टते स्वव्यापारेषु न चेष्टते न व्याप्रियते तामाहुः परमाङ्गतिम् ॥ १० ॥

तामीदृशीं तदवस्थां योगमिति मन्यन्ते वियोगमेव सन्तम् । सर्व्वानर्थसंयोगवियोगलक्षणा हीयमवस्था योगिनः । एतस्यां ह्यवस्थायामविद्याध्यारोपणावर्जितस्वरूपप्रतिष्ठ आत्मा स्थिरामिन्द्रियधारणाम् । स्थिरामचलामिन्द्रियधारणां वाह्यान्तःकरणानां धारणामित्यर्थः । अप्रमत्तः प्रमादवर्जितः समाधानं प्रति नित्यं प्रयत्नवांस्तदा तस्मिन् काले यदैव प्रवृत्तयोगो भवतीति सामर्थ्यादवगम्यते । न हि बुद्ध्यादिचेष्टाभावे प्रमादसम्भवोऽस्ति । तस्मात्प्रागेव बुद्ध्यादिचेष्टोपरमात्प्रमादो विधीयते ।

ष्ठन्ते निवृत्तव्यापाराणि भवन्तीत्यर्थः ॥ वियोगमेव सन्तं योगमिति विरुद्धलक्षणया मन्यन्त इत्युक्तं तत्स्फुटयति सर्व्वानर्थेति ॥ उपसंहृतं मनो यदि सुषुप्तिं गच्छेत्तदा सानर्थबीजावस्था भवति । तद्व्यावृत्तये पूर्णं ब्रह्मास्मीत्यावृत्तौ योजयेदावृत्तौ नियुक्तं विषयेषु विक्षिप्तं चेत्स्यात्तद्दोषदर्शनेन ततो व्यावृत्तमपि तत्तस्तटस्थं चेत्स्यात्साऽपि यावत्कषायावस्था ततो निरुद्धं मनो यदा न जागर्त्ति न स्वपिति न चान्तरालावस्थं भवति पूर्णब्रह्मावभासकतयैव क्षीणं भवति तदा सर्व्वानर्थवियोगलक्षणा साऽवस्था भवतीत्यर्थः । योगारम्भकाले प्रमादवर्जनं

अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ ॥ ११ ॥
नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा ।

अथवा यदैवेन्द्रियाणां स्थिरा धारणा तदानीमेव निरङ्कुशमप्रमत्तत्वमित्यतोऽभिधीयतेऽप्रमत्तस्तदा भवतीति । कुतः । योगो हि यस्मात्प्रभवाप्ययौ उपजनापायधर्म्मका इत्यर्थोऽतोऽपायपरिहारायाप्रमादः कर्त्तव्य इत्यभिप्रायः ॥ ११ ॥

बुद्ध्यादिचेष्टाविषयं यद्ब्रह्मेदं तदिति विशेषतः ग्रहीत बुद्ध्याद्युपरमे च ग्रहणकारणाभावादनुपलभ्यमानं नास्त्येव ब्रह्म यद्धि करणगोचरं तदस्तीति प्रसिद्धं लोके। विपरीतञ्चासदितरत्र चानर्थको योगोऽनुपलभ्यमानत्वाद्वा नास्तीत्युपलब्धव्यं ब्रह्मेत्येवं प्राप्ते इदमुच्यते । सत्यं नैव वाचा मनसा न चक्षुषा नान्यैरपीन्द्रियैः प्राप्तुं शक्य इत्यर्थः । तथापि सर्व्वविशेषरहितोऽपि जगतो मूलमित्यवगतत्वादस्त्येव कार्य्यप्रविलापनस्यास्तित्वनिष्ठ-

विधेयतया व्याख्यायानुवादपरतया व्याचष्टे । अथवेति ॥ विधिपक्षे हेतुं पृच्छति । कुत इति ॥ १० ॥ ११ ॥

उत्तरमन्त्रमवतारयितुं शङ्कामुद्भावयति । बुद्ध्यादिचेष्टाविषयञ्चेति ॥ घटोऽस्तीति प्रतिपन्नस्य घटस्य मुद्गराभिघाताद्विलयने घटाकार एव विलीयते । नास्तित्वांशस्तस्य कपालादावप्यनुवृत्तिदर्शनात् । अतः कार्य्यप्रविलापनस्यास्तित्वनिष्ठत्वान्न शून्यतापर्य्यवसायी लय इत्युक्तमेतत् स्फुटयति । तथाहीति ॥ स्थूलस्य कार्य्यस्य विलये सूक्ष्मं तत्कारणमवशिष्यते तस्यापि विलये ततः सूक्ष्ममिति यावद्दर्शनव्याप्तिमुपलभ्य यत्र न दृश्यते तत्रापि मूर्त्तविलयस्यावश्यम्भावित्वान्न सन्मात्रमेवामूर्त्तमवतिष्ठत इति कार्य्यमेव सौक्ष्म्यतारतम्यपारम्पर्य्येणानुमीयमाणं सद्बुद्धिनिष्ठां पुरुषस्य गमयतीत्यर्थः ॥ ननु यद्दृश्यं तदसत् यथा स्वप्नदर्शनमिति व्याप्तिदर्शनादस्तित्वेन दृश्यस्यासत्त्वाद्बु-

**अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते ॥ १२ ॥**

---

त्वात् । तथा हीदं कार्य्यं सूक्ष्मतारतम्यपारम्पर्य्येणानुगम्यमानं सद्बुद्धिनिष्ठामेवावगमयति । यदापि विषयप्रविलापनेन प्रविलाप्यमाना बुद्धिस्तदापि सा सत्प्रत्ययगर्भैव विलीयते । बुद्धिर्हि नः प्रमाणं सदसतोर्याथात्म्यावगमे मूलं चेज्जगतो न स्यादसदन्वितमेवेदं कार्य्यमसदित्येवं गृह्येत न त्वेतदस्ति सत्सदित्येव तु गृह्यते । यथा मृदादिकार्य्यं घटादि मृदन्वितम् । तस्माज्जगतो मूलमात्मास्तीत्येवोपलब्धव्यम् । तस्मादस्तीति ब्रुवतोऽस्तित्ववादिन आगमार्थानुसारिणः श्रद्दधानादन्यत्र नास्तिकवादिनि नास्ति जगतो मूलमात्मा निरन्वयमेवेदं कार्य्यमभावान्तं प्रविलीयत इति मन्यमाने विपरीतदर्शिनि कथं तद्ब्रह्म तत्त्वत उपलभ्यते न कथञ्चनोपलभ्यत इत्यर्थः ॥ १२ ॥

---

द्धिरपि नास्त्येवेत्याशङ्क्याह । यदापीति ॥ सद्बुद्धिरपि नास्तीत्येवम्भूतः प्रतीत्याऽवश्यमस्तीत्यभ्युपगन्तव्यम् । अन्यथा निषेधव्यवहारायोगात् । अतोऽन्तता गत्वा सद्बुद्धिः स्वीकृता स्यादित्यर्थः ॥ ततः किमित्यत त्याह । बुद्धिर्हीति ॥ व्यभिचारिष्वपि विषयेषु सन्मात्रबुद्धेरव्यभिचारदर्शनाद्बुद्धेश्च स्वतः प्रामाण्यात्सन्मात्रं वस्त्वभ्युपगन्तव्यमित्यर्थः । इतश्च सदेव मूलं जगतो वाच्यमित्याह । मूलञ्चेदिति ॥ नास्ति जगतो मूलं ब्रह्मेत्यवगमेऽपि प्रतियोगितया ब्रह्मज्ञानसम्भवत्वात् ॥ किमिति मुमुक्षुणा ब्रह्मज्ञानकामेनास्तीत्येवोपलब्धव्यमित्याह । कस्मादिति ॥ प्रतियोगितया ज्ञानस्य निषेध्यत्वादात्मतया ज्ञानं न स्यादतो ब्रह्मज्ञानकामेनास्ति जगन्मूलमित्यवगन्तव्यमेवेत्याह । अस्तीति ब्रुवत इत्यादिना ॥ १२ ॥

अस्तीत्येवोपलब्धव्यस्तत्त्वभावेन चोभयोः । अस्तीत्येवोपलब्धस्य तत्त्वभावः प्रसीदति ॥ १३ ॥

यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ।

तस्मादपोह्यासद्वादिपक्षमासुरमस्तीत्येवात्मोपलब्धव्यः सत्कार्यबुद्ध्याद्युपाधिः । यदा तु तद्रहितोऽविक्रिय आत्मा कार्यञ्च कारणव्यतिरेकेण नास्ति वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति श्रुतेः तदा तस्य निरुपाधिकस्यालिङ्गस्य सदसदादिप्रत्ययविषयत्ववर्जितस्यात्मनस्तत्त्वभावो भवति । तेन च रूपेणात्मोपलभ्यत इत्यनुवर्त्तते । तत्राप्युभयोः सोपाधिकनिरुपाधिकयोरस्तित्वतत्त्वभावयोर्निर्द्धारणार्था षष्ठी । पूर्वमस्तीत्येवोपलब्धस्यात्मनः सत्कार्योपाधिकृतास्तित्वप्रत्ययेनोपलब्धस्येत्यर्थः । पश्चात्प्रत्यस्तमितसर्वोपाधिरूप आत्मनस्तत्त्वभावो विदिताभ्यामन्योऽद्वयस्वभावो नेति ह्यस्थूलमनण्वह्रस्वमदृश्येऽनात्म्येऽनिलय इत्यादिश्रुतिनिर्द्दिष्टः प्रसीदत्यभिमुखीभवति आत्मनः प्रकाशनाय पूर्वमस्तीत्युपलब्धवत इत्येतत् ॥ १३ ॥

एवं परमार्थदर्शिनः यदा यस्मिन् काले सर्वे कामाः कामयितव्यस्यान्यस्याभावात्प्रमुच्यन्ते विशीर्य्यन्ते येऽस्य प्राक् प्रति-

---

सोपाधिकस्यात्मनो ज्ञानान्मुक्त्यसम्भवान्निरुपाधिकज्ञानायापि प्रयतितव्यमित्याह । यदा त्विति ॥ सोपाधिके प्रथमं स्थिरीभूतस्य तद्द्वारेण लक्ष्यपदार्थावगमे सति क्रमेण वाक्यार्थावगतिः सम्भाव्यत इत्याह । तत्राप्युभयोरित्यादिना ॥ सदुपलभ्यमानकार्य्यमुपाधिर्यस्य कारणत्वस्य तत्कृतो योऽस्तित्वप्रत्ययः कारणत्वादस्तिपर आत्मेति तेनोपलब्धस्येति योजना ॥ १३ ॥

सर्वे कामा इति । प्रवृत्तफलकर्मोपस्थापिते शरीरस्थितिनिमित्तान्नपानादौ प्रवृत्तिकारणेच्छाव्यतिरिक्ताः सर्वे कामाः

अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥ १४ ॥
यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः ॥ अथ मर्त्योऽमृतो भवत्येतावदनुशासनम् ॥ १५ ॥

---

बोधाद्विदुषो हृदि बुद्धौ श्रिता आश्रिताः। बुद्धिर्हि कामानामाश्रयो नात्मा कामः सङ्कल्प इत्यादिश्रुत्यन्तराच्च। अथ तदा मर्त्यः प्राक् प्रबोधादासीत् स प्रबोधोत्तरकालमविद्याकामकर्म्मलक्षणस्य मृत्योर्विनाशादमृतो भवति गमनप्रयोजकस्य वा मृत्योर्विनाशाद्गमनानुपपत्तेः। अत्रैव प्रदीपनिर्व्वाणवत्सर्व्वबन्धनोपशमाद्ब्रह्म समश्नुते ब्रह्मैव भवतीत्यर्थः ॥ १४ ॥

कदा पुनः कामानां मूलतो विनाश इत्युच्यते। यदा सर्व्वे प्रभिद्यन्ते भेदमुपयान्ति विनश्यन्ति हृदयस्य बुद्धेरिह जीवत एव ग्रन्थयो ग्रन्थिवद्दृढबन्धनरूपा अविद्याप्रत्यया इत्यर्थः। अहमिदं शरीरं ममेदं धनं सुखी दुःखी चाहमित्येवमादिलक्षणास्तद्विपरीतब्रह्मात्मप्रत्ययोपजननाद्ब्रह्मैवाहमस्म्यसंसारीति विनष्टेष्वविद्याग्रन्थिषु तन्निमित्ताः कामा मूलतो विनश्यन्ति। अथ मर्त्योऽमृतो भवत्येतावद्ध्येतावदेवैतावन्मात्रं नाधिकमस्तीत्याशङ्का कर्त्तव्या। अनुशासनमनुशिष्टिरुपदेशः सर्व्ववेदान्तानामिति वाक्यशेषः ॥ १५ ॥

---

काम्येन ज्योतिष्टोमादिना स्वर्गं प्रपत्स्यामि वैपुल्यराधनेन जनं वशीकरिष्यामीत्येवमादयः स्वर्गादिदेहेष्वप्यहमेव तिष्ठामि। तद्भोगाश्च प्राप्ता एवाप्राप्तविषयस्य कामो व्यर्थो मिथ्या चासाविति विचारेण विशीर्य्यन्त इत्यर्थः। कामाश्रय आत्मेति वैशे-

## शतञ्चैका च हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिः-

निरस्तशेषविशेषव्यापिब्रह्मात्मप्रतिपत्त्या प्रभिन्नसमस्ताविद्यादिग्रन्थेर्जीवत एव ब्रह्मभूतस्य विदुषो न गतिर्विद्यत इत्युक्तम् । अत्र ब्रह्म समश्नुत इत्युक्तत्वान्न तस्य प्राणा उत्क्रामन्ति । ब्रह्मैव सन् ब्रह्माप्येतीति श्रुत्यन्तराच्च । ये पुनर्मन्दब्रह्मविदो विद्यान्तरशालिनश्च ब्रह्मलोकभाजो ये तद्विपरीताः संसारभाजस्तेषामेष गतिविशेष उच्यते । प्रकृतोत्कृष्टब्रह्मविदो विद्याफलस्तुतये । किञ्चान्यदग्निविद्या पृष्टा प्रत्युक्ता च । तस्याश्च फलप्राप्तिप्रकारो वक्तव्य इति मन्त्रारम्भः । तत्र शतञ्च शतसङ्ख्याका एका च सुषुम्ना नाम पुरुषस्य हृदयाद्विनिःसृता नाड्यः शिरास्तासां मध्ये मूर्द्धानं भित्त्वाऽभिनिःसृता निर्गता एका सुषुम्ना नाम तयाऽन्तकाले हृदये आत्मानं वशीकृत्य योजयेत् । तया नाड्योर्द्ध्वमुपर्य्यायन् गच्छन्नादित्यद्वारेणामृतत्वममरणधर्मत्वमापेक्षिकम् । आभूतसंप्लवं स्थानममृतत्वं हि भाष्यत इति स्मृतेः । ब्रह्मणा वा सह कालान्तरेण मुख्यममृतत्वमेति भुक्त्वा भोगाननुपमान् ब्रह्मलोकगतान् विष्वक् नानाविधगतयोऽन्या

---

धिकमतं श्रुतिवाह्यत्वान्नादरणीयमेवेत्याह । बुद्धिर्हीति ॥ कामप्रविलयस्य सुषुप्तेऽपि भावादमृतत्वचिह्नत्वं भवतीति मत्वाह । कदा पुनरिति ॥ १४ ॥ १५ ॥

प्रकरणविच्छेदेनोक्तस्य सम्बन्धं दर्शयति । निरस्ताशेषेत्यादिना ॥ पदभाणिभास्करेण प्रकरणाद्ब्रह्मविद्विषयैवेयं गतिरिति तदसङ्गतिश्रवणेन लिङ्गेन परिच्छिन्ने चामानयोग्येऽस्या गतेः सम्बन्धागमे सुदुर्ब्बलेन प्रकरणेन प्रकृतब्रह्मवित्सम्बन्धानु

स्तैका ॥ तयोर्द्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति ॥ १६ ॥

अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः । तं स्वाच्छरीरात् प्रवृहेन्मुञ्जादिवेषीकां धैर्य्येण । तं विद्याच्छुक्रममृतं तं विद्याच्छुक्रममृतमिति ॥ १७ ॥

मृत्युप्रोक्तान्नचिकेतोऽथ लब्ध्वा विद्यामेतां योग-

---

नाड्य उत्क्रमणे निमित्तं भवन्ति संसारप्रतिपत्त्यर्था एव भवन्तीत्यर्थः ॥ १६ ॥

इदानीं सर्व्ववल्लयर्थोपसंहारार्थमाह । अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां सम्बन्धिनि हृदये सन्निविष्टो यथा व्याख्यातस्तं स्वादात्मीयाच्छरीरात्प्रवृहेदुद्यच्छेन्निःकर्षेण पृथक्कुर्य्यादित्यर्थः। किमिवेत्युच्यते । मुञ्जादिवेषीकाम् अन्तस्थां धैर्य्येणाप्रमादेन ॥ तं शरीरान्निष्कृष्टं चिन्मात्रं विद्याद्विजानीयाच्छुक्रं शुद्धममृतं यथोक्तं ब्रह्मेति । तं विद्याच्छुक्रममृतमिति द्विर्वचनमुपनिषत्समाप्त्यर्थमिति ॥ १७ ॥

विद्यास्तुत्यर्थोऽयमाख्यायिकार्थोपसंहारोऽधुनोच्यते । मृत्युप्रोक्तां यमोक्तामेतां विद्यां ब्रह्मविद्यां योगविधिञ्च कृत्स्नं समस्तं

---

पपत्तेः । नाड्यन्तराणामपि सत्सम्बन्धप्रसङ्गाच्छ्रुतिविरुद्धप्रसङ्गाच्च । विस्तरस्य प्रकटार्थे द्रष्टव्यः ॥ ६ ॥

आत्मानं देहमधिकृत्य वर्त्तत इत्यध्यात्मं प्रत्यक्स्वरूपमेव ब्रह्म प्राप्य विमृत्युर्भवति ॥ नान्यद्रूपमर्च्चिरादिमार्गगम्यं प्राप्य ।

विधिञ्च कृत्स्नम् । ब्रह्मप्राप्तो विरजोऽभूद्विमृत्यु र
न्योऽप्येवं यो विदध्यात्ममेव ॥ १८ ॥

सहनाववतु सह नौ भुनक्तु सह वीर्य्यं करवावहै

---

सोपकरणं सफलमित्येतन्नाचिकेतोऽथ वरप्रदानान्मृत्योर्लब्ध्वा प्राप्येत्यर्थः । किन्च ब्रह्मप्राप्तोऽभून्मुक्तोऽभवदित्यर्थः । कथं विद्याप्राप्त्या विरजो विगतधर्म्माधर्म्मौ विमृत्युर्विगतकामाविद्यश्च सन् पूर्व्वमित्यर्थः । न केवलं नचिकेता एव अन्योऽपि य एवं नचिकेतोवदध्यात्ममेवं निरुपचरितं प्रत्यक्स्वरूपं प्राप्य तमेवेत्यभिप्रायः ॥ नान्यद्रूपमप्रत्यग्रूपं तदेवमध्यात्ममेवमुक्तप्रकारेण यो वेद विजानाति एवंवित्सोऽपि विरजः सन् ब्रह्मप्राप्त्या विमृत्युर्भवतीति वाक्यशेषः ॥ १८ ॥

अथ शिष्याचार्य्ययोः प्रमादकृतान्यायेन विद्याग्रहणप्रतिपादननिमित्तदोषशमनार्थेयं शान्तिरभिधीयते । सह नावावामवतु पालयतु विद्यास्वरूपप्रकाशनेन । कः । स एव परमेश्वर उपनिषत्प्रकाशितः । किन्च सह नौ भुनक्त तत्फलप्रकाशनेन नौ पालयतु । सहैवावां विद्याकृतं वीर्य्यं सामर्थ्यं करवावहै निष्पादयावहै । किन्च तैजस्वि नौ तेजस्विनोरावयोर्यदधीतं तत्स्वधीतमस्तु । अथ वा तेजस्वि नावावाभ्यां यदधीतं तदधीव तेजस्वि वीर्य्यवदस्त्वित्यर्थः । माविद्विषावहै शिष्याचार्य्यावन्योन्यं प्रमादकृताभ्यामध्ययनाध्यापनदोषनिमित्तं द्वेषं मा

---

संयोगस्य विनियोगवासनात्वादित्यर्थः । एवंशब्दस्य विच्छब्देन सह सम्बन्ध एवंविधः । एवंविदिति ॥ इति श्रीमच्छङ्करस्य

तेजस्वि नावधीतमस्तु मा विद्विषावहै ॥ ॐ शान्तिः शान्तिः शान्तिः । हरिः ॐ ॥१६॥

इति कठोपनिषदि द्वितीयाध्याये षष्ठी वल्ली समाप्ता ॥६॥ ॐ तत्सत् ॥ ॐ ॥

करवावहा इत्यर्थः ॥ शान्तिः शान्तिः शान्तिरिति त्रिर्वचनं सर्व्वदोषोपशमनार्थम् ॥ इत्युपनिषत्समाप्त्यर्थः ॥ १६ ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्य्यस्य श्रीमच्छङ्करभगवतः कृतौ काठकभाष्ये द्वितीयाध्याये षष्ठी वल्ली समाप्ता ॥ ६ ॥ इति कठोपनिषद्भाष्यं सम्पूर्णम् ॥

ओं तत्सत् ओं ॥

कठोपनिषद्भाष्यटीका श्रीमदानन्दज्ञानकृता समाप्ता ॥१७॥१८॥

ओं हरिः ओं ॥